महाकविभासप्रणीतः

# मध्यमव्यायोगः

# మధ్యమ వ్యాయోగము

– महाकविःभासः

## ఉపోద్ఘాతము

సంస్కృత సాహిత్యమునందు మహాకవియైన భాసుని ఎరుంగని వారుండరు. భాసుని నాటకము లందున్న భరత వాక్యమును బట్టి భాసుడు ఉత్తర భారత నివాసి యని తెలియుచున్నది. శ్రీ గణపతి శాస్త్రి యొక్క వాదన ననుసరించి భాసుడు అర్థ శాస్త్రమును రచించిన చాణక్యుని కంటె, వ్యాకరణ కర్తయైన పాణిని మహర్షి కంటె ప్రాచీనుడు అని తెలియుచున్నది. "ప్రథిత యశసాం భాససౌమిల్లకకవి పుత్రాదీనాం ప్రబంధానతిక్రమ్య వర్తమానకవేః కాళిదాసస్య క్రియాయాం కథంబహుమానః" అని కాళిదాసు తన మాలవికాగ్నిమిత్రమను నాటక ప్రస్తావనలో పేర్కొనుటవలన భాసుడు కాళిదాసుకంటె ప్రాచీనుడని స్పష్టమగుచున్నది. కనుక భాసుడు క్రీ.శ.3వ శతాబ్దములోని వాడని చెప్పవచ్చును. దీనిని పెక్కుపండితు లంగీకరించుచున్నారు.

**భాసుని ప్రతిభ**

సంస్కృత నాటక కర్తలలో భాసుడు ప్రథమునిగా కీర్తింపదగినవాడు. ఇతని నాటకములు ప్రదర్శనకు యోగ్యముగా యుండును. భాషలలితముగా సర్వజనులకు ఆమోద యోగ్యముగా యుండును. కాళిదాసాదుల నాటకములకంటె భాసుని నాటకములు ఉత్తమమైనవిగా పేర్కొనచ్చును. ఇతని నాటకములలో సంభాషణ చమత్కారముగా యుండును. అపూర్వములైన కల్పనలతో ఇతివృత్తమునకే శోభను కలిగించును. ఈ కల్పనలే నాటకములకు అందమును చేకూర్చును. భారత రామాయణాదులలో అప్రసిద్ధులైన కొన్ని ముఖ్యపాత్రలను సానుభూతి పాత్రములుగా చిత్రించి పండితులను మెప్పించుట భాసుని ప్రత్యేకత. ఇతడు మానవులలోని అంతరంగములను విశేషముగా చిత్రించి, సహజముగా మానవుల స్వభావములను చిత్రించెనని కీర్తించబడెను.

**భాసుని రచనలు**

సంస్కృత సాహిత్యమునందు భాసుడు పెక్కు నాటకములను రచించెను. ఆ నాటకముల వలననే యితడు అమరుడైనట్లు కీర్తింపబడెను.

ఇతనిచే రచింపబడిన నాటకములు -

1. ప్రతిమానాటకము 2. అభిషేక నాటకము 3. పంచరాత్రము 4. మధ్యమ వ్యాయోగము. 5. దూత-ఘటోత్కచము 6. కర్ణ భారము 7. దూత వాక్యము. 8. ఊరుభంగము 9. బాలచరితము 10. దరిద్రచారుదత్తము. 11. అవిమారకము 12. ప్రతిజ్ఞా యౌగంధరాయణము 13. స్వప్న వాసవదత్తము.

వీటిలో ప్రతిమానాటకము, అభిషేక నాటకము అను రెండును రామాయణ కథ ఇతివృత్తముగా కలిగినవి. పంచరాత్రము, మధ్యమ వ్యాయోగము, దూతఘటోత్కచము, కర్ణ భారము, దూత వాక్యము, ఊరు భంగము, బాల చరితము అను ఏడును మహాభారతములోని కథ ఇతివృత్తముగా కలిగినవి. ప్రతిజ్ఞాయౌగంధరాయణము, స్వప్నవాసవదత్తము అను రెండును ఉదయనుని కథ ఇతివృత్తముగా గలవి. దరిద్రచారుదత్తము, అవిమారకము అను రెండును స్వతంత్రముగా రచించబడినవి.

మధ్యమ వ్యాయోగము

మధ్యమ వ్యాయోగమునకు ముఖ్యపాత్రలు మహాభారతమునుండి స్వీకరించబడినవి. ఇందులోని కథ కల్పితము. ఇది ఏకాంకముతో కూడిన వ్యాయోగము. కేవలము ముఖ్యపాత్రలైన భీమసేనుడు, హిడింబా-ఘటోత్కచుడు అను మూడు పాత్రలు మాత్రమే మహాభారతము నుండి స్వీకరించబడినవి. ఈపాత్రలతో మరికొన్ని పాత్రలను సమకూర్చి కవి కథను కల్పించి దీనిని రచించెను. ఘటనలన్నియు ఒక దినములోనే పరిసమాప్తమగును. ఈ ఘటనలన్నియు ఒకే అంకములో నిబద్ధమైయుండును. దీనియందు భీమసేనుడు పాండవ మధ్యమునిగా చిత్రించబడెను. కథ ముఖ్యపాత్రయైన భీమసేనునిపై ఆధారపడి యుండును. అందుచేత 'మధ్యమ వ్యాయోగము'గా చెప్పబడుచున్నది.

## మధ్యమ వ్యాయోగములోని పాత్రలు

### పురుషులు

భీమసేనుడు - పాండవమధ్యముడు, నాయకుడు.

ఘటోత్కచుడు - హిడింబా భీమసేనుల పుత్రుడు.

వృద్ధుడు - కేశవదాసు అను ఒక బ్రాహ్మణ వృద్ధుడు.

ప్రథముడు - కేశవదాసు యొక్క మొదటి పుత్రుడు.

ద్వితీయుడు - కేశవదాసు యొక్క రెండవ పుత్రుడు.

తృతీయుడు - కేశవదాసు యొక్క మూడవ పుత్రుడు.

## స్త్రీలు

హిడింబా - భీమసేనుని యొక్క భార్య.

బ్రాహ్మణి - కేశవదాసు యొక్క భార్య.

नान्द्यन्ते ततः प्रविशति सूत्रधारः

सूत्रधारः– पायात्स वोऽसुरवधूहृदयावसादः
पादो हरेः कुवलयामलखड्गनीलः।
यः प्रोद्धतस्त्रिभुवनक्रमणे रराज
वैदूर्यसङ्क्रम इवाम्बरसागरस्य ॥ १ ॥

एवमार्यमिश्रान् विज्ञापयामि। अये किन्नु खलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते। अङ्ग! पश्यामि।

(नेपथ्ये)

भोस्तात! को नु खल्वेषः।

सूत्रधारः– भवतु विज्ञातम्।
भोः शब्दोच्चारणादस्य ब्राह्मणोऽयं न संशयः।
त्रास्यते निर्विशङ्केन केनचित्पापचेतसा ॥ २ ॥

(नेपथ्ये)

भोस्तात! को नु खल्वेषः।

सूत्रधारः– हन्त दृढं विज्ञातम्। एष खलु पाण्डवमध्यम – स्यात्मजो हिडिम्बारणिसम्भूतो राक्षसाग्निरकृत – वैरं ब्राह्मणजनं वित्रासयति। भो कष्टं कष्टं खलु पत्नीसुतपरिवृतस्य ब्राह्मणस्य वृत्तान्तः। अत्र हि, –

श्रान्तैः सुतैः परिवृतस्तरुणैः सदारो
वृद्धो द्विजो निशिचरानुचरः स एषः।
व्याघ्रानुसारचकितो वृषभः स धेनुः
सन्त्रस्तवत्सक इवाकुलतामुपैति ॥ ३ ॥

(निष्क्रान्तः)

स्थापना

(ततः प्रविशति सुतत्रयकलत्रपरिवृतः केशवदासः पृष्ठतो घटोत्कचश्च)

वृद्धः – भोः को नु खल्वेषः?

तरुणरविकरप्रकीर्णकेशो
भ्रुकुटिपुटोज्ज्वलपिंगलायताक्षः।
सतडिदिव घनः सकण्ठसूत्रो
युगनिधने प्रतिमाकृतिर्हरस्य ॥ ४ ॥

प्रथमः – भोस्तात! को नु खल्वेषः?

ग्रहयुगलनिभाक्षः पीनविस्तीर्णवक्षाः।
कनक कपिलकेशः पीतकौशेयवासाः।
तिमिरनिवहवर्णः पाण्डरोद्वृत्तदंष्ट्रो
नव इव जलगर्भो लीयमानेन्दुलेखः ॥ ५ ॥

द्वितीयः – क एष भोः!

कलभदशनदंष्ट्रो लाङ्गलाकार नासः
करिवर करबाहुर्नीलजीमूतवर्णः
हुतहुतवहदीप्तो यः स्थितो भाति भीम –
स्त्रिपुरपुरनिहन्तुः शङ्करस्येव रोषः ॥ ६ ॥

तृतीयः – भोस्तात! को नु खल्वयमस्मान् पीडयति?

वज्रपातोऽचलेन्द्राणां श्येनः सर्वपतत्रिणाम्।
मृगेन्द्रो मृगसङ्घानां मृत्युः पुरुषविग्रहः ॥ ७ ॥

ब्राह्मणी – आर्य क एषोऽस्मान् सन्तापयति?

घटोत्कचः–भो ब्राह्मण! तिष्ठ तिष्ठ

किं यासि मद्भयविनाशितधैर्यसारो
वित्रस्तदारसुतरक्षणहीनशक्ते!
ताक्ष्याग्रपक्षपवनोद्धतरोषवह्नि–
स्तीव्रः कलत्रसहितो भुजगो यथार्तः ॥ ८ ॥

भो ब्राह्मण! न गन्तव्यं न गन्तव्यम्।

वृद्धः – ब्राह्मणि! न भेतव्यं न भेतव्यम्। पुत्रकाः। न भेतव्यम्। सविमर्शा ह्यस्य वाणी।

घटोत्कचः–भो! कष्टम्।

जानामि सर्वत्र सदा च नाम
द्विजोत्तमाः पूज्यतमाः पृथिव्याम्।
अकार्यमेतच्च मयाद्य कार्यं
मातुर्नियोगादपनीतशङ्कम् ॥ ९ ॥

वृद्धः – ब्राह्मणि! किं न स्मरसि तत्र भवता जलक्लिन्नेन मुनिनोक्तम् – अनपेतराक्षसमिदं वनमप्रमादेन गन्तव्यमिति। तदेवोत्पन्नं भयम्।

ब्राह्मणी – किमिदानीमार्यो मध्यस्थवर्ण इव दृश्यते।

वृद्धः – किं करिष्यामि मन्दभाग्यः?

ब्राह्मणी – ननु विक्रोशामः।

प्रथमः – भवति! कस्य वयं विक्रोशामः?

इदं हि शून्यं तिमिरोत्करप्रभै –
    र्नगप्रकारैरवरुद्धदिक्पथम्।
खगैर्मृगैश्चापि समाकुलान्तरं
    वनं निवासाभिमतं मनस्विनाम् ॥ १० ॥

वृद्धः – ब्राह्मणि! न भेतव्यं न भेतव्यम्। मनस्विजननिवास –योग्यमिति श्रुत्वा विगत इव मे सन्त्रासः। शङ्के नात्रातिदूरेण पाण्डवाश्रमेण भवितव्यम्। पाण्डवास्तु –

युद्धप्रियाश्च शरणागतवत्सलाश्च
    दीनेषु पक्षपतिताः कृतसाहसाश्च।
एवंविधप्रतिभयाकृतिचेष्टितानां
    दण्डं यथार्हमिह धारयितुं समर्थाः ॥ ११ ॥

प्रथमः – भोस्तात! न तत्र पाण्डवा इति मन्ये।

वृद्धः – पुत्र! कथं त्वं जानीषे।

प्रथमः – श्रुतं मया तस्मादाश्रमादागतेन केनचित् ब्राह्मणेन कथितम्। शतकुम्भं नाम यज्ञमनुभवितुं महर्षे–र्धौम्यस्याश्रमं गता इति।

वृद्धः – हन्त हताः स्मः।

प्रथमः– तात! न तु सर्व एव। आश्रमपरिपालनार्थमिह स्थापितः किल मध्यमः।

वृद्धः – यद्येवं सन्निहिताः सर्व एव पाण्डवाः।

प्रथमः – स चाप्यस्यां वेलायां व्यायामपरिचयार्थं विप्रकृष्ट देशस्थ इति श्रूयते।

वृद्धः – हन्त निराशाः स्मः। भवतु, पुत्र! व्यपश्रयिष्ये तावदेनम्।

प्रथमः – अलमलं परिश्रमेण।

वृद्धः – पुत्र! निर्वेदप्रत्यर्थिनी खलु प्रार्थना। भवतु, पश्याम – स्तावत्। भोः पुरुष! अस्त्यस्माकं मोक्षः?

घटोत्कचः– मोक्षोऽस्ति समयतः।

वृद्धः – कः समयः?

घटोत्कचः–अस्ति मे तत्रभवती जननी। तयाहमाज्ञप्तः – पुत्र! ममोपवासनिसर्गार्थमस्मिन्
वनदेशे कश्चिन्मानुषः परिमृग्यानेतव्य इति। ततो मयासादितो भवान् –
पत्न्या चारित्रशालिन्या द्विपुत्रो मोक्षमिच्छसि।
बलाबलं परिज्ञाय पुत्रमेकं विसर्जय ॥ १२॥

वृद्धः – हं भो राक्षसापसद किमहमब्राह्मणः।
ब्राह्मणः श्रुतवान् वृद्धः पुत्रं शीलगुणान्वितम्
पुरुषादस्य दत्वाहं कथं निर्वृतिमाप्नुयाम् ॥ २३॥

घटोत्कचः–यद्यर्थितो द्विजश्रेष्ठ! पुत्रमेकं न मुञ्चसि।
सकुटुम्बः क्षणेनैव विनाशमुपयास्यसि ॥ २४ ॥

वृद्धः – ब्राह्मणि! एष एव मे निश्चयः।
कृतकृत्यं शरीरं मे परिणामेन जर्जरम्।
राक्षसाग्नौ सुतापेक्षी होष्यामि विधिसंस्कृतम् ॥ २५॥

ब्राह्मणी – आर्य! मा मैवम्। पतिमात्रधर्मिणी पतिव्रतेति नाम।
गृहीतफलेनैतेन शरीरेणार्यं कुलं च रक्षितुमिच्छामि।

घटोत्कचः–न खलु स्त्रीजनोऽभिमतस्तत्र भवत्याः।

वृद्धः – अहमनुगमिष्यामि भवन्तम्।

घटोत्कचः–आः वृद्धस्त्वमपसर।

प्रथमः – भोस्तात! ब्रवीमि खलु तावत् किञ्चित्।

वृद्धः – पुत्र! कथय।

प्रथमः – मम प्राणैर्गुरुप्राणानिच्छमि परिरक्षितुम्।
रक्षणार्थं कुलस्यास्य मोक्तुमर्हति मां भवान् ॥२६॥

द्वितीयः – आर्य! मा मैवम्।
ज्येष्ठः श्रेष्ठः कुले लोके पितृणां च सुसम्प्रियः।
ततोऽहमेव यास्यामि गुरु वृत्तिमनुस्मरन् ॥२७ ॥

तृतीयः – वत्स! मा मैवम्।
ज्येष्ठो भ्राता पितृसमःकथितो ब्रह्मवादिभिः।
ततोऽहं कर्तुमस्म्यर्हो गुरूणां प्राणरक्षणम् ॥ २८॥

प्रथमः – वत्स! मा मैवम्।
आपदं हि पिता प्राप्तो ज्येष्ठपुत्रेण तार्यते।
ततोऽहमेव यास्यामि गुरूणां प्राणरक्षणात् ॥ २६॥

वृद्धः –. ज्येष्ठमिष्टतमं न शक्नोमि परित्यक्तुम्

ब्राह्मणी – यथार्थो ज्येष्ठमिच्छति, तथाहमपि कनिष्ठमिच्छामि।

द्वितीयः – पित्रोरनिष्टः कस्येदानीं प्रियः?

घटोत्कचः–अहं प्रीतोऽस्मि, शीघ्रमागच्छ।

द्वितीयः – धन्योऽस्मि यद्गुरुप्राणाः स्वैःप्राणै परिरक्षिताः।

बन्धुस्नेहाद्धि महतः कायस्नेहस्तु दुर्लभः ॥ २० ॥

घटोत्कचः–अहो स्वजनवात्सल्यमस्य ब्राह्मणवटोः।

द्वितीयः – भोस्तात! अभिवादये।

वृद्धः – एह्येहि पुत्र !

विनिमाय गुरुप्राणान् स्वैः प्राणैर्गुरुवत्सल।

अकृतात्मदुरावापं ब्रह्मलोकमवाप्नुहि ॥ २१ ॥

द्वितीयः – अनुगृहीतोऽस्मि। अम्ब! अभिवादये।

ब्राह्मणी – जात! चिरं जीव।

द्वितीयः – अनुगृहीतोऽस्मि। आर्य! अभिवादये।

प्रथमः – एह्येहि वत्स!

परिष्वजस्व गाढं मां परिष्वक्तः शुभैर्गुणैः।

कीर्त्या तव परिष्वक्ता भविष्यति वसुन्धरा ॥ २२ ॥

द्वितीयः – अनुगृहीतोऽस्मि।

ब्राह्मणी – आर्य! अभिवादये।

द्वितीयः – स्वस्ति।

तृतीयः – अनुगृहीतोऽस्मि।

द्वितीयः – भोः पुरुष! ब्रवीमि किञ्चित्।

घटोत्कचः–ब्रूहि ब्रूहि शीघ्रम्।

द्वितीयः – एतस्मिन वनान्तरे जलाशय इव दृश्यते। तत्र मे प्रकल्पितपरलोकस्य पिपासाप्रतीकारं करिष्यामि।

घटोत्कचः – दृढव्यवसायिन्! गम्यताम्। अतिक्रामति मातुराहारकालः। शीघ्रमागच्छ।

(निष्क्रान्तः)

वृद्धः – हा हा परिमुषिताःस्मो भोः! परिमुषिताः स्मः।

यस्त्रिशृङ्गे मम त्वासीन्मनोज्ञो वंशपर्वतः।

स मध्यशृङ्गभङ्गेन मनस्तपति मे भृशम् ॥ २३ ॥

हा पुत्र! कथं गत एव।

तरुण! तरुणतानुरूपकान्ते!

नियमपराध्ययनप्रसक्तबुद्धे।

कथमिह गजराजदन्तभग्न –

स्तरुरिव यास्यसि पुष्पितो विनाशम् ॥२४॥

घटोत्कचः – चिरायते खलु ब्राह्मणवटुः। अतिक्रामति मातुराहारकालः। किन्नु खलु करिष्ये। भवतु, दृष्टम्। भो ब्राह्मण! आहूयतां तव पुत्रः।

वृद्धः – आः! अतिराक्षसं खलु ते वचनम्।

घटोत्कचः – कथं रुष्यति, मर्षयतु, मर्षयतु भवान्। अयं मे प्रकृतिदोषः। अथ किन्नामा तव पुत्रः।

वृद्धः – एतदपि शक्यं श्रोतुम्।

घटोत्कचः – युक्तं भोः! ब्राह्मणकुमार! किन्नामा ते भ्राता?

प्रथमः – तपस्वी मध्यमः।

घटोत्कचः – मध्यम इति सदृशमस्य। अहमेवाह्वयामि। भो भो मध्यम! मध्यम! शीघ्रमागच्छ।

(ततः प्रविशति भीमसेनः)

भीमसेनः – भोः कस्यायं स्वरः?

खगशतविरुते विरौति तारं

द्रुमगहने दृढसङ्कटे वनेऽस्मिन्।

जनयति च मनोज्वरं स्वरोऽयं

बहुसदृशो हि धनञ्जयस्वरस्य ॥२५॥

घटोत्कचः – चिरायते खलु ब्राह्मणवटुः। अतिक्रामति मातु–राहारकालः। किन्नु खलु करिष्ये। भवतु दृष्टम्। उच्चैः शब्दापयामि। भो भो मध्यम! शीघ्रमागच्छ।

भीमसेनः – भोः! को नु खल्वेतस्मिन् वनान्तरे मम व्यायाम–विघ्नमुत्पाद्य मध्यम मध्यम इति मां शब्दापयति। भवतु पश्यामस्तावत्। (परिक्रम्यावलोक्य) अहो दर्शनीयोऽयं पुरुषः। अयं हि –

सिंहास्यः सिंहदंष्ट्रो मधुनिभनयनः स्निग्धगम्भीरकण्ठो बभ्रुभ्रूः श्येननासो द्विरदपतिहनुर्दीर्घ विश्लिष्टकेशः। व्यूढोरा वज्रमध्यो गजवृषभगतिर्लम्बपीनांसबाहुः सुव्यक्तं राक्षसीजो विपुलबलयुतो लोकवीरस्य पुत्रः ॥२६॥

घटोत्कचः – चिरायते खलु ब्राह्मणवटुः। अतिक्रामति मातुराहारकालः। किमिदानीं करिष्ये। भवतु, उच्चैराह्वानं करिष्ये। भो भो मध्यम! शीघ्रमागच्छ।

भीमसेनः – भो! प्राप्तोऽस्मि।

घटोत्कचः – न खल्वयं ब्राह्मणवटुः। अहो दर्शनीयोऽयं पुरुषः।

य एषः,

सिंहाकृतिः कनकतालसमानबाहु – र्मध्येतनुर्गरुडपक्षविलिप्तपक्षः।

विष्णु र्भवेद्विकसिताम्बुजपत्रनेत्रो – नेत्रे ममाहरति बन्धुरिवागतोऽयम् ॥२७॥

भो मध्यम! त्वां खल्वहं शब्दापयामि।

भीमसेनः – अतः खल्वहं प्राप्तः।

घटोत्कचः – किं भवानपि मध्यमः।

भीमसेनः – न तावदपरः।

मध्यमोऽहमवध्यानामुत्सिक्तानां च मध्यमः।

मध्यमोऽहं क्षितौ भद्र! भ्रातॄणामपि मध्यमः ॥२८॥

घटोत्कचः – भवितव्यम्।

भीमसेनः – अपि च

मध्यमः पञ्चभूतानां पार्थिवानां च मध्यमः।

भवे च मध्यमो लोके सर्वकार्येषु मध्यमः ॥२९॥

वृद्धः – मध्यमस्त्विति सम्प्रोक्ते नूनं पाण्डवमध्यमः।

अस्मान् मोक्तुमिहायातो दर्पान्मृत्योरिवोत्थितः ॥३०॥

(प्रविश्य)

मध्यमः – अस्यामाचम्य पद्मिन्यां परलोकेषु दुर्लभम्।

आत्मनैवात्मनो दत्तं पद्मपत्रोज्ज्वलं जलम् ॥३१॥

(उपगम्य) भोः पुरुष! प्राप्तोऽस्मि।

घटोत्कचः – प्राप्तवानिदानीं खल्वसि त्वम्। मध्यम! इतः इतः।

वृद्धः – (भीमसेनमुपगम्य) भो मध्यम! परित्रायस्व ब्राह्मणकुलम्।

भीमसेनः – न भेतव्यम्। मध्यमोऽहमभिवादये।

वृद्धः – वायुरिव दीर्घायुर्भव।

भीमसेनः – अनुगृहीतोऽस्मि। कुतो भयमार्यस्य।

वृद्धः – श्रूयताम् – अहं खलु कुरुराजेन युधिष्ठिरेणाधिष्ठितपूर्वे कुरुजाङ्गले यूपग्रामवास्तव्यो माठरसगोत्रश्च कल्पशाखाध्वर्युः केशवदासो नाम ब्राह्मणः। तस्य ममोत्तरस्यां दिश्युद्यामकग्रामवासी मातुलः कौशिक गोत्रो यज्ञबन्धु र्नामास्ति। तस्य पुत्रोपनयनार्थं सकलत्रोऽस्मि प्रस्थितः।

भीमसेनः– अरिष्टोऽस्तु पन्थाः। ततस्ततः।

वृद्धः – ततो मामेष हि –

सजलजलदगात्रः पद्मपत्रायताक्षो – मृगपतिगतिलीलो राक्षसःप्रोग्रदंष्ट्रः।
जगति विगतशङ्कस्त्वद्विधानां समक्षं – ससुतपरिजनं भो !हन्तुकामोऽभ्युपैति ॥३१॥

भीमसेनः– एवम्, अनेन ब्राह्मणजनस्य मार्गविघ्नः कृतः। भवतु निग्रहिष्यामि तावदेनम्। भोः पुरुष! तिष्ठ तिष्ठ।

घटोत्कचः–एष स्थितोऽस्मि।

भीमसेनः– किमर्थं ब्राह्मणजनमपराध्यसि?

पुत्रनक्षत्रकीर्णस्य पत्नीकान्तप्रभस्य च।
वृद्धस्य विप्रचन्द्रस्य भवान् राहुरिवागतः ॥३३॥

घटोत्कचः–अथ किम्। राहुरेव।

भीमसेनः– आः,

निवृत्तव्यवहारोऽयं सदारस्तनयैः सह।
सर्वापराधेऽवध्यत्वान्मुच्यतां द्विजसत्तमः ॥३४॥

घटोत्कचः– न मुच्यते।

भीमसेनः– (आत्मगतम्) भोः कस्य पुत्रेणानेन भवितव्यम्?

भ्रातृणां मम सर्वेषां कोऽयं भो गुणतस्करः।
दृष्ट्वैतद्बालशौण्डीर्यं सौभद्रस्य स्मराम्यहम् ॥३५॥

(प्रकाशम्) भोः पुरुष! मुच्यताम्?

घटोत्कचः– न मुच्यते।

मुच्यतामिति विस्रब्धं ब्रवीति यदि मे पिता।
न मुच्यते तथा ह्येष गृहीतो मातुराज्ञया ॥३६॥

भीमसेनः– (आत्मगतम्) कथं मातुराज्ञेति। अहो गुरुशुश्रूषुः खल्वयं तपस्वी।

माता किल मनुष्याणां दैवतानां च दैवतम्।
मातुराज्ञां पुरस्कृत्य वयमेतां दशां गताः ॥३७॥

(प्रकाशम्) भोः पुरुष! प्रष्टव्यं खलु तावदस्ति।

घटोत्कचः–ब्रूहि ब्रूहि शीघ्रम्।

भीमसेनः– का नाम भवतो माता।

घटोत्कचः– श्रूयताम्, हिडिम्बा नाम राक्षसी।

कौरव्यकुलदीपेन पाण्डवेन महात्मना।
सनाथा या महाभागा पूर्णेन द्यौरिवात्मना ॥३८॥

भीमसेनः– (आत्मगतम्) एवम्, हिडिम्बायाः पुत्रोऽयम्।

सदृशो ह्यस्य गर्वः।

रूपं सत्त्वं बलं चैव पितृभिः सदृशं बहु।

प्रजासु वीतकारुण्यं मनश्चैवास्य कीदृशम् ॥३९॥

(प्रकाशम्) भोः पुरुष! मुच्यताम्।

घटोत्कचः–न मुच्यते।

भीमसेनः– भो ब्राह्मण! गृह्यतां तव पुत्रः। वयमेनमनुगमिष्यामः।

द्वितीयः– मा मा भवानेवम्।

त्यक्ता प्रागेव मे प्राणा गुरुप्राणेष्वपेक्षया।

युवा रूपगुणोपेतो भवांस्तिष्ठतु भूतले ॥४०॥

भीमसेनः– आर्य! मा मैवम्। क्षत्रियकुलोत्पन्नोहम्। पूज्यतमाः खलु ब्राह्मणाः। तस्मान्मच्छरीरेण ब्राह्मणशरीरं विनिमातुमिच्छामि।

घटोत्कचः–एवं, क्षत्रियोऽयम्। तेनास्य गर्वः। भवतु, इममेव हत्वा नेष्यामि। अथ केनायं वारितः?

भीमसेनः– मया।

घटोत्कचः–किं त्वया?

भीमसनः– अथ किम्।

घटोत्कचः–तेन हि भवानवागच्छतु।

भीमसेनः– एवम्, अतिवीर्यबलं नानुगच्छामि। यदि ते शक्तिरस्ति, बलात्कारेण मां नय।

घटोत्कचः–किं मां प्रत्यभिजानीते भवान्?

भीमसेनः– मत्पुत्र इति जाने।

घटोत्कचः– कथं कथं तव पुत्रोऽहम्?

भीमसेनः– कथं रुष्यति, मर्षयतु भवान्। सर्वाःप्रजाः क्षत्रियाणां पुत्रशब्देनाभिधीयन्ते। अत एवं मयाभिहितम्।

घटोत्कचः–भीतानामायुधं गृहीतम्।

भीमसेनः– शपामि सत्येन भयं न जाने ज्ञातुं तदिच्छामि भवत्समीपे।

किं रूपमेतद् वद भद्र! तस्य गुणागुणज्ञः सदृशं प्रपत्स्ये ॥४१॥

घटोत्कचः–एष ते भयमुपदिशामि, गृह्यतामायुधम्।

भीमसेनः– आयुधमिति। गृहीतमेतत्।

घटोत्कचः–कथमिव?

भीमसेनः– काञ्चनस्तम्भसदृशो रिपूणां निग्रहे रतः।

अयं तु दक्षिणो बाहुरायुधं सहजं मम॥ ॥४२॥

घटोत्कचः–इदमुपपन्नं पितुर्मे भीमसेनस्य।

भीमसेनः– अथ कोऽयं भीमो नाम?

विश्वकर्ता शिवः कृष्णः शक्रः शक्ति धरो यमः।

एतेषु कथ्यतां भद्र! केन ते सदृशः पिता ॥४३॥

घटोत्कचः–सर्वैः।

भीमसेनः– धिगनृतमेतत्।

घटोत्कचः–कथं कथमनृतमित्याह। क्षिपति मे गुरूम्। भवतु, इमं स्थलं वृक्षमुत्पाट्य प्रहरामि।

(उत्पाट्य प्रहरति) कथमनेनापि न शक्यते हन्तुम्। किन्नु खलु करिष्ये। भवतु

दृष्टम्। एतद् गिरिकूटमुत्पाट्य प्रहरामि।

शैलकूटं मया क्षिप्तं प्रणानादाय यास्यति।

भीमसेनः– रुष्टोऽपि कुञ्जरो वन्यो न व्याघ्रं धर्षयेद्वेन ॥४४॥

घटोत्कचः–(प्रहृत्य) कथमनेनापि न शक्यते हन्तुम्। किन्नु खलु करिष्ये। भवतु, दृष्टम्।

खलु करिष्ये। भवतु, दृष्टम्।

नन्वहं भीमसेनस्य पुत्रः पौत्रो नभस्वतः।

तिष्ठेदानीं सुसन्नद्धो नियुद्धे नास्ति मत्समः ॥४५॥

(इत्युभौ नियुद्धं कुरुतः)

घटोत्कचः–(भीमसेनं बद्ध्वा) –

व्रजसि कथमिहत्वं वीर्यमुल्लङ्घ्य बाह्वो–

र्गज इव दृढपाशैपीडितो मद्भुजाभ्याम्।

भीमसेनः– (आत्मगतम्) कथं गृहीतोऽस्म्यनेन। भोः सुयोधन!

वर्धते खलु शत्रुपक्षः। कृतरक्षो भव। (प्रकाशम्)

भोः पुरुष! अवहितो भव।

घटोत्कचः–अवहितोऽस्मि।

भीमसेनः– (नियुद्धबन्धमवधूय)

व्यपनय बलदर्पं दृष्टसारोऽसि वीर!

न हि मम परिखेदो विद्यते बाहुयुद्धे ॥४६॥

घटोत्कचः–कथमनेनापि न शक्यते हन्तुम्। किन्तु खलु करिष्ये?

भवतु दृष्टम्। अस्ति मातृप्रसादलब्धो मायापाशः।

तेन बद्ध्वैनं नेष्यामि। कुतः खल्वापः? भो गिरे!

आपस्तावत्। हन्त, स्रवति। (आचम्य मन्त्रं जपति) भोः पुरुष।

मायापाशेन बद्धस्त्वं विवशोऽनुगमिष्यसि

राजसे रज्जुभिर्बद्धः शक्रध्वज इवोत्सवे ॥४७॥

(इति मायया बध्नाति)

भीमसेनः– कथं मायापाशेन बद्धोऽस्मि। किमिदानीं करिष्ये।

भवतु दृष्टम्। अस्ति महेश्वरप्रसादलब्धो मायापाशमोक्षो मन्त्रः। तं जपामि। कुतः खल्वापः? भो ब्राह्मणकुमार! आनय कमण्डलुगता अपः।

वृद्धः– इमा अपः।

(भीमसेनः आचम्य मन्त्रं जप्त्वा मायां मोचयति)

घटोत्कचः–अये पतितःपाशः। किमिदानीं करिष्ये। भवतु, भोः पुरुष। पूर्वसमयं स्मर।

भीमसेनः– समय इति। एष स्मरामि। गच्छाग्रतः।

(उभौ परिक्रामतः)

वृद्धः– पुत्रकाः किं कुर्मः। अयं गच्छति वृकोदरः।

आक्रम्य राक्षसमिमं ज्वलदुग्ररूप–

मुग्रेण बाहुबलवीर्यगुणेन युक्तम्।

एष प्रयाति शनकैरवधूय शीघ्र–

मासारवर्षमिव गोवृषभः सलीलः ॥४८॥

घटोत्कचः–इह तिष्ठ। त्वदागमनमम्बायै निवेदयामि।

भीमसेनः– बाढम्। गच्छ।

घटोत्कचः–(उपसृत्य) अम्ब! अभिवादये। घटोत्कचोऽहम्। चिराभिलषितो भवत्या आहारार्थमानीतो मानुषः।

(प्रविश्य)

हिडिम्बा– जात! चिरं जीव। कीदृशो मानुष आनीतः?

घटोत्कचः–भवति। वाङ्मात्रेण मानुषो, न वीर्येण।

हिडिम्बा– किं ब्राह्मणः?

घटोत्कचः–न ब्राह्मणः।

हिडिम्बा– अथवा स्थविरः?

घटोत्कचः–न वृद्धः।

हिडिम्बा– किं बालः?

घटोत्कचः–न बालः।

हिडिम्बा– यद्येवं, पश्यामि तावदेनम्।

(उभौ परिक्रामतः)

हिडिम्बा– किमेष मानुष आनीतः।

घटोत्कचः–भवति। कोऽयम्?

हिडिम्बा – उन्मत्तक! दैवतं खल्वस्माकम्। घटोत्कचः–आः कस्य दैवतम्?

हिडिम्बा– तव च मम च।

घटोत्कचः–कः प्रत्ययः?

हिडिम्बा– अयं प्रत्ययः। जयत्वार्यपुत्रः।

भीमसेनः– (विलोक्य) का पुनरियम्?

अये देवी हिडिम्बा।

अस्माकं भ्रष्टराज्यानां भ्रमतां गहने वने।

जातकारुण्यया देवि! सन्तापो नाशितस्त्वया ॥४६॥

हिडिम्बे! किमिदम्?

हिडिम्बा – (कर्णे) आर्यपुत्र! ईदृशमिव।

भीमसेनः– जात्या राक्षसी, न समुदाचारेण।

हिडिम्बा – उन्मत्तक! अभिवादय पितरम्।

घटोत्कचः–अज्ञानात्तु मया पूर्वं यद्भवान्नाभिवादितः।

अस्य पुत्रापराधस्य प्रसादं कर्तुमर्हसि ॥५०॥

भोस्तात! अहं स धार्तराष्ट्रवनदवाग्निर्घटोत्कचोऽभिवादये। पुत्रचापलं क्षन्तुमर्हसि।

भीमसेनः– एह्येहि पुत्र! व्यतिक्रमकृतं क्षान्तमेव। (परिष्वज्य)

धार्तराष्ट्रवनदवाग्निः। पुत्रापेक्षीणि खलु पितृहृदयानि। पुत्र अतिबलपराक्रमो भव,

घटोत्कच– अनुगृहीतोऽस्मि।

वृद्धः – एवं भीमसेनपुत्रोऽयं घटोत्कचः।

भीमसेनः– पुत्र! अभिवादयात्रभवन्तं केशवदासम्।

घटोत्कच– भगवन्नभिवादये।

वृद्धः– पितृसदृशगुणकीर्तिं भव।

घटोत्कचः–अनुगृहीतोऽस्मि।

वृद्धः– भो वृकोदर! रक्षितमस्मत्कुलं, स्वकुलमुद्धृतं च। गच्छामस्तावत्।

भीमसेनः- अनुग्रहात्तु भवतः सर्वमासीदिदं शुभम्।
आश्रमोऽदूरतेऽस्माकं तत्र विश्रम्य गम्यताम् ॥५१॥

वृद्धः- कृतमातिथ्यमनेन जीवितप्रदानेन। तस्माद् गच्छामस्तावत्।

भीमसेनः- गच्छतु भवान् सकुटुम्बः पुनर्दर्शनाय।

वृद्धः- बाढम्। प्रथमः कल्पः।

(निष्क्रान्तः सकलत्रपुत्रः केशवदासः)

भीमसेनः- हिडिम्बे - इतस्तावत्। वत्स! घटोत्कच! इतस्तावत्। तत्रभवन्तं केशवदासमाश्रमपदद्वारमात्रमपि सम्भावयिष्यामः।

यथा नदीनां प्रभवःसमुद्रो
यथाहुतीनां प्रभवो हुताशः।
यथेन्द्रियाणां प्रभवं मनोऽपि
तथा प्रभूर्नो भगवानुपेन्द्रः ॥५२॥

(निष्क्रान्ताः सर्वे)

इति मध्यमव्यायोगः।

## ప్రతిపదార్థ తాత్పర్యములు

(నాంద్యంతే తతః ప్రవిశతి సూత్రధారః)

అ: నాంద్యంతే = నాందీచివర, తతః = తరువాత, సూత్రధారః = సూత్రధారుడు, ప్రవిశతి = ప్రవేశించును.

తా: (నాందీచివర,తరువాత సూత్రధారుడు ప్రవేశించును)

సూ: పాయాత్స వోఽసురవధూహృదయావసాదః

1.శ్లో పాదో హరేః కువలయామల ఖడ్గనీలః।
యఃప్రోద్ధత స్త్రిభువనక్రమణే రరాజ
వైఢూర్యసంక్రమ ఇవాంబర సాగరస్య ।

అ: యః = ఏపాదము, త్రిభువనక్రమణే = ముల్లోకములను కొలుచుటయందు, ప్రోద్ధతః = పైకెత్తబడినదై, అంబర సాగరస్య = ఆకాశమను సముద్రమునకు, వైఢూర్య సంక్రమః ఇవ = వైఢూర్యములతో నిర్మించబడిన వారధివలె, రరాజ = ప్రకాశించెనో, సః = అట్టిప్రసిద్ధమైన, అసురవధూహృదయావసాదః = రాక్షసస్త్రీల హృదయములకు దుఃఖమును కలిగించునదైన, కువలయామల ఖడ్గనీలః = నల్లకలువవలె స్వచ్ఛమైన ఖడ్గమువలె నీలమైన, హరేః = విష్ణువు యొక్క, పాదః = పాదము, వః = మిమ్ములను, పాయాత్ = రక్షించుగాక !

రా॥ ఏ పాదము ముల్లోకములను కొలుచుటకు పైకెత్తబడినదై ఆకాశమను సముద్రమునకు వైఢూర్యములతో నిర్మించబడిన వారధివలె ప్రకాశించెనో, రాక్షసస్త్రీల హృదయములకు దుఃఖమును కలిగించునదైన, నల్ల కలువవలె స్వచ్ఛమైన ఖడ్గమువలె నీలవర్ణముగా యున్నదైన విష్ణువు యొక్క (వామనుని యొక్క) పాదము మిమ్ములను రక్షించుగాక!

ఏవ మార్యమిశ్రాన్ విజ్ఞాపయామి. అయే కిన్నుఖలు మయి విజ్ఞాపన వ్యగ్రే శబ్ద ఇవ శ్రూయతే. అంగ! పశ్యామి.

అ॥ ఏవం = ఈవిధముగా, ఆర్యమిశ్రాన్ = పూజనీయులనుగూర్చి, విజ్ఞాపయామి = విన్నవించెదను, అయే = అదే, మయి = నేను, విజ్ఞాపనవ్యగ్రే = విన్నవించుటకు సంసిద్ధుడనై యుండగా, కింను = ఏదియో, శబ్దఃఇవ = శబ్దమువలె, శ్రూయతే = వినబడుచున్నది. అంగ = ఓయీ, పశ్యామి = చూచెదను.

రా॥ ఇట్లు పూజనీయులకు విన్నవించెదను. అరే! నేను విన్నవించుటకు సంసిద్ధుడనై యుండగా ఏదో శబ్దమువలె వినబడుచున్నది. ఓయీ! చూచెదను.

(నేపథ్యే = నేపథ్యమునందు)

భోస్తాత! కోను ఖల్వేషః

అ॥ భోస్తాత = ఓతండ్రీ! ఏషః = ఇతడు, కః నుఖలు = ఎవడోకదా!.

రా॥ ఓతండ్రీ! ఇతడెవడోకదా!

సూ॥ భవతువిజ్ఞాతమ్

ఆ! తెలిసినది.

2.శ్లో॥ భోః శబ్దోచ్చారణాదస్య బ్రాహ్మణోఽయం న సంశయః ।
త్రాస్యతే నిర్భీశంకేన కేనచిత్ పాపచేతసా ।2।

అ॥ అస్య = ఇతని యొక్క, భోః శబ్దోచ్చారణాత్ = భోః అనుశబ్దమును ఉచ్ఛరించుటవలన, అయం = ఇతడు, బ్రాహ్మణః = బ్రాహ్మణుడు, న సంశయః = సందేహములేదు, కేనచిత్ = ఒకానొక, నిర్భీశంకేన = పాపభీతి లేనట్టి, పాపచేతసా = దుష్టమనస్సు కలిగిన వానిచే, త్రాస్యతే = భయపెట్టబడుచున్నాడు.

రా॥ ఇతడు భోః అనుశబ్దమును ఉచ్ఛరించుట వలన ఇతడు బ్రాహ్మణుడు. సందేహములేదు. ఇతడు పాపభీతిలేనట్టి, దుష్టమనస్సు కలిగిన యొకనిచే భయపెట్టబడుచున్నాడు.

(నేపథ్యే = తెరయందు)

భోస్తాత ! కోను ఖల్వేషః

ఓ తండ్రీ ! ఇతడు ఎవడో కదా!

సూ॥ హంత దృఢం విజ్ఞాతమ్ ఏష ఖలు పాండవమధ్యమస్యాత్మజో హిడింబారణి సంభూతో రాక్షసాగ్నిరకృతవైరం బ్రాహ్మణజనం విత్రాసయతి. భో కష్టం ఖలు పత్నీసుత పరివృతస్య బ్రాహ్మణస్య వృత్తాంతః అత్రహి

అ॥ హంత = అయ్యో, దృఢం = బాగుగా, విజ్ఞాతం = తెలిసినది. ఏషః = ఇతడు, పాండవ మధ్యమస్య = పాండవ మధ్యముడైన భీముని యొక్క, ఆత్మజః = కుమారుడు, హిడింబారణిసంభూతః = హిడింబ యను అరణియందు పుట్టినవాడు, రాక్షసాగ్నిః =రాక్షసుడను అగ్ని, అకృతవైరం = శతృత్వము నెరుంగని, బ్రాహ్మణజనం = బ్రాహ్మణ జనుని, విత్రాసయతిఖలు = భయపెట్టుచున్నాడు కదా!, పత్నీసుత పరివృతస్య = భార్యాపుత్రులతో కూడియున్న, బ్రాహ్మణస్య = బ్రాహ్మణుని యొక్క, వృత్తాంతః = పరిస్థితి, కష్టంఖలు = కష్టము కదా ! అత్ర హి= ఇచ్చట.

తా॥ అయ్యో! బాగుగా తెలిసినది. ఇతడు పాండవమధ్యముని కుమారుడు. 'హిడింబ' యను అరణి యందు పుట్టినవాడు. రాక్షసుడను అగ్ని. ఏ వైరమునెరుంగని బ్రాహ్మణ జనుని భయపెట్టుచున్నాడు కదా! భార్యాపుత్రులతో కూడి యున్న బ్రాహ్మణుని పరిస్థితి కష్టమైనది కదా! ఇచ్చట -

3.శ్లో॥ శ్రాంతైః సుతైః పరివృతస్తరుణైః సదారో
వృద్ధో ద్విజో నిశిచరాను చరః స ఏషః।
వ్యాఘ్రాను సారచకితో వృషభః సధేనుః
సంత్రస్త వత్సక ఇవాకులతాముపైతి ॥3॥

అ॥ శ్రాంతైః = జితేంద్రియులైన, తరుణైః = యువకులైన, సుతైః= పుత్రులతో, పరివృతః = చుట్టబడినవాడైన, సదారః = భార్యతో కూడినవాడైన, నిశిచరానుచరః = రాక్షసునిచే వెంబడించబడినవాడైన, సఃఏషః = ఆ ఈ, వృద్ధః = ముసలివాడైన, ద్విజః = బ్రాహ్మణుడు, సంత్రస్తవత్సకః = భయపడిన దూడగలదైన, సధేనుః = ఆవుతో కూడినదైన, వ్యాఘ్రానుసారచకితః = పెద్దపులి వెంబడించుటచే భయపడినదైన, వృషభః ఇవ = ఎద్దువలె, ఆకులతాం = వ్యాకులత్వమును, ఉపైతి = పొందుచున్నాడు.

తా॥ జితేంద్రియులైన, యువకులైన పుత్రులతో కూడినవాడైన, భార్యతో కూడిన వాడైన, రాక్షసునిచే వెంబడించబడినవాడైన ఈ ముసలిబ్రాహ్మణుడు, భయపడిన దూడ గలదైన గోవుతో కూడినదైన, పెద్దపులి వెంబడించుటచే భయపడుచున్నదైన ఎద్దువలె వ్యాకులత్వమును బొందుచున్నాడు.

(విష్కంభః = విన్యసించెను)

# స్థాపనా

(తతః ప్రవిశతి సుతత్రయ కలత్ర పరివృతః కేశవదాసః పృష్ఠతో ఘటోత్కచశ్చ)
[తరువాత ముగ్గురు కుమారులతోను భార్యతోను కూడిన బ్రాహ్మణుడు, వెనక ఘటోత్కచుడు కూడ ప్రవేశించును]

వృద్ధః భోః! కోను ఖల్వేషః = ఓహో! ఇతడెవ్వడో కదా!

4.శ్లో। తరుణ రవికర ప్రకీర్ణకేశో
భ్రుకుటిపుటోజ్జ్వల పింగలాయతాక్షః ।
సతడి దివ ఘనః సకంఠసూత్రో
యుగనిధనే ప్రతిమాకృతి ర్హరస్య ।

అ। తరుణరవి = లేత సూర్యుని యొక్క, కర = కిరణములవలె, ప్రకీర్ణకేశః = చెల్లాచెదురుగా నున్న జుట్టు కలవాడు, భ్రుకుటిపుట = కనుబొమ్మల సమీపమున, ఉజ్జ్వల = ప్రకాశించుచున్న, పింగల = పచ్చని, ఆయతాక్షః = విశాలమైన కన్నులు కలవాడు, సకంఠసూత్రః = కంఠ సూత్రముతో కూడినవాడు, సతడిత్ = మెరుపుతో కూడిన ఘనఃఇవ = మేఘమువలె, యుగనిధనే = ప్రళయకాలమునందు, హరస్య = ఈశ్వరుని యొక్క, ప్రతిమాకృతిః = సమానమైన ఆకారము గలవాడు.

తా। లేత సూర్యుని యొక్క కిరణములవలె చెల్లాచెదరుగా యున్న జుట్టుగలవాడైన, కనుబొమ్మల సమీపమున ప్రకాశించుచున్న పచ్చని విశాలమైన కన్నులుగల వాడైన, కంఠసూత్రము కలిగిన వాడైన, మెరుపుతో కూడిన మేఘమువలె ప్రళయకాలములోని హరుని యొక్కరూపముతో సమానమైన ఆకారము గలవాడైన ఇతడు ఎవడో కదా!

ప్ర: భోస్తాత!కో ను ఖల్వేషః
ఓతండ్రీ! ఇతడు ఎవడో కదా?

5.శ్లో। గ్రహయుగళనిభాక్షః పీనవిస్తీర్ణవక్షాః
కనక కపిలకేశః పీతకౌశేయవాసాః ।
తిమిరనివహవర్ణః పాండరోద్వృత్తదంష్ట్రో
నవ ఇవ జలగర్భో లీయమానేందులేఖః ।

అ। గ్రహయుగల = రెండు గ్రహములతో, నిభాక్షః = సమానమైన కన్నులు కలవాడు, పీన విస్తీర్ణవక్షాః = బలిసిన విశాలమైన వక్షస్థలము గలవాడు, కనక కపిలకేశః = బంగారము వలె పచ్చని జుట్టుగలవాడు, పీత కౌశేయవాసాః = పచ్చని పట్టువస్త్రము గలవాడు, తిమిరనివహవర్ణః =చీకటి సముదాయము వంటి రంగు గలవాడు, పాండరోద్వృత్తదంష్ట్రః= ముందుకు వచ్చిన తెల్లని దంతములు గలవాడు, లీయమానేందు లేఖః = లీనమైన

చంద్రలేఖ గలవాడు, నవః జలగర్భః ఇవ = జలము గర్భమందుగల క్రొత్త మేఘము వంటివాడు.

తా॥ ఇతడు రెండుగ్రహములతో సమానమైన (సూర్యచంద్రులతో సమానమైన) కాంతిగల కన్నులు గలవాడు. బలిసిన విశాలమైన వక్షస్థలము గలవాడు. బంగారము వలె పచ్చని జుట్టుగలవాడు. పచ్చని పట్టు వస్త్రము గలవాడు. చీకటి సమూహము వంటి రంగుగలవాడు. ముందుకు వచ్చిన తెల్లని దంతములు గలవాడు. లోపల లీనమైన చంద్రలేఖ గలవాడు. జలము గర్భమందు గలిగిన క్రొత్త మేఘము వంటివాడు.

ద్వి॥ క ఏష భోః ।

ఓ తండ్రీ ! ఇతడెవడు?

**6.శ్లో ।** **కంభదశన దంష్ట్రో లాంగలాకార నాసః**
**కరివర కరబాహు ర్నీల జీమూత వర్ణః ।**
**హుత హుతవహదీప్తో యః స్థితో భాతి భీమ –**
**స్త్రిపురపుర విహంతుః శంకరస్యేవ రోషః ।**

అ॥ కంభదశన దంష్ట్రః =ఏనుగు దంతముల వంటి దంతములు గలవాడు, లాంగలాకారనాసః = నాగలి వంటి ఆకారముగల ముక్కుగలవాడు, కరివర కరబాహుః = ఏనుగుతొండమువంటి బాహువులు గలవాడు, నీల జీమూత వర్ణః = నల్లని మేఘమువంటి వర్ణము గలవాడు, హుత హుతవహదీప్తః = హోమము చేయబడిన అగ్నివలె ప్రకాశించువాడు, భీమః = భయంకరమైనవాడు, అనుచూ యః = ఎవడు, త్రిపుర పురవిహంతుః = త్రిపురాసురుల నగరములను నాశనము జేసిన, శంకరస్య = శివుని యొక్క, రోషః ఇవ = క్రోధము వలె, స్థితః = ఉన్నాడో, స ఏషః = ఆ ఇతడు, కః = ఎవడు?

తా॥ ఏనుగు దంతములవంటి దంతములు కలవాడై, నాగటివంటి ఆకారముగల ముక్కుగలవాడై, ఏనుగు తొండము వంటి బాహువులు గలవాడై, నల్లని మేఘము వంటి వర్ణము గలవాడై, హోమము చేయబడిన అగ్నివలె ప్రకాశించు వాడై, భయంకరుడై ఎవడు త్రిపురరాక్షసుల నగరములను నాశనము చేసిన శివుని యొక్క క్రోధము వలె ఎదుట యున్నాడో, అతడెవడు?

తృ॥ భో స్తాత!కోను ఖల్వయమస్మాన్ పీడయతి ?

అ॥ భోః తాత ! ఓతండ్రీ ! అయం = ఇతడు, కను = ఎవడో, అస్మాన్ = మనలను, పీడయతి ఖలు = పీడించుచున్నాడుకదా!

తా॥ ఓ తండ్రీ! ఇతడెవడో మనలను పీడించుచున్నాడు కదా !

7.శ్లో ॥ వజ్రపాతోఽచలేంద్రాణాం శ్యేనః సర్వ పతత్రిణామ్ ।
మృగేంద్రో మృగసంఘానాం మృత్యుః పురుష విగ్రహః ॥

అ॥ అచలేంద్రాణాం = పర్వతాధిపతులకు, వజ్రపాతః = వజ్రపుదెబ్బ వంటివాడు, సర్వపతత్రిణాం = సమస్త పక్షులకు, శ్యేనః = డేగవంటివాడు, మృగ సంఘానాం = లేళ్ళ గుంపులకు, మృగేంద్రః = సింహము వంటివాడు, పురుషవిగ్రహః = పురుషరూపము కలిగిన, మృత్యుః = మృత్యువు

తా॥ ఇతడు పర్వతాధిపతులకు వజ్రపుదెబ్బ వంటివాడు. సమస్త పక్షులకు డేగవంటివాడు. లేళ్ళ గుంపులకు సింహము వంటివాడు. పురుష రూపమును దాల్చిన మృత్యువు.

బ్రా॥ ఆర్య! క ఏ షో ఽ స్మాన్ సంతాపయతి

అ॥ ఆర్య = స్వామీ ! ఏషః = ఇతడు, కః = ఎవడు, అస్మాన్ = మనలను, సంతాపయతి = బాధించుచున్నాడు ?

తా॥ స్వామీ! ఇతడెవడు మనలను బాధించుచున్నాడు?

ఘ- భో బ్రాహ్మణ ! తిష్ఠ తిష్ఠ
ఓ బ్రాహ్మణుడా ! ఆగుము. ఆగుము.

8.శ్లో॥ కిం యాసి మద్భయవినాశిత ధైర్యసారో
విత్రస్త దార సుతరక్షణ హీనశక్తే ।
తార్క్ష్యాగ్ర పక్ష పవనోద్ధత రోషవహ్ని
స్తీవ్రః కలత్రసహితో భుజగో యథార్తః ॥

అ॥ విత్రస్త = భయపడిన, దార = భార్య యొక్క, సుత = పుత్రుల యొక్క, రక్షణ = రక్షణ యందు, హీనశక్తే = శక్తిలేనివాడా!, మద్భయవినాశిత ధైర్యసారః - మద్భయ =భయముచే, వినాశిత = నశింపజేయబడిన, ధైర్యసారః = ధైర్యము యొక్క సారము గలవాడవై, తార్క్ష్య = గరుత్మంతుని యొక్క, అగ్రపక్ష = ముందు రెక్కల యొక్క, పవన = గాలిచే, ఉద్ధత = పెరిగిన, రోషవహ్నిః = క్రోధమను అగ్ని కలిగిన, తీవ్రః = తీవ్రమైన, కలత్ర సహితః = భార్యతో కూడిన, ఆర్తః = బాధపడుచున్న, భుజగఇవ = సర్పమువలె, కిం యాసి = వెళ్లుచున్నావేమి ?

తా॥ భయపడుచున్న భార్యాపుత్రుల సంరక్షణ యందు శక్తిలేనివాడవైన ఓ బ్రాహ్మణుడా! నాభయముచే నశించిన ధైర్యము గలవాడవై, గరుత్మంతుని ముందు రెక్కల గాలిచే పెరిగిన క్రోధమను అగ్ని కలిగిన భార్యతో కూడి బాధపడుచున్న తీవ్రమైన సర్పము వలె వెళ్ళుచున్నావేమి ?

భో బ్రాహ్మణ ! న గంతవ్యం న గంతవ్యమ్
ఓ బ్రాహ్మణుడా ! పోవలదు. పోవలదు.

వృద్ధ : బ్రాహ్మణి ! న భేతవ్యం న భేతవ్యమ్. పుత్రకా ! 
న భేతవ్యమ్. సవిమర్శా హ్యస్య వాణీ.

అ। బ్రాహ్మణి = ఓ బ్రాహ్మణీ! న భేతవ్యం = భయపడవలదు, పుత్రకా = పుత్రులారా!, న భేతవ్యం = భయపడవలదు. అస్య = ఈ రాక్షసుని యొక్క, వాణీ = మాట సవిమర్శా హి =వివేక సహితమైనది కదా!

తా। ఓ బ్రాహ్మణి! భయపడవలదు. భయపడవలదు. పుత్రులారా ! భయపడవలదు. ఈతని మాట వివేకముతో కూడినదికదా!

ఘ:- భో! కష్టమ్.
ఆహా ! ఎంత కష్టము.

9.శ్లో। జానామి సర్వత్ర సదా చ నామ
ద్విజోత్తమాః పూజ్యతమాః పృథివ్యామ్ ।
అకార్య మేతచ్చ మయాద్య కార్యం
మాతుర్నియోగా దపనీత శంకమ్ ।

అ। పృథివ్యాం = భూమియందు, సర్వత్ర = అంతట, సదా = ఎల్లప్పుడు, ద్విజోత్తమాః = బ్రాహ్మణోత్తములు, పూజ్యతమాః = పూజింపదగినవారు, ఇతి = అని, జానామి = ఎరుంగుదును, అద్య = ఇప్పుడు, ఏతత్ అకార్యం చ = ఈ చెడు కార్యము కూడ, మాతుః = తల్లియొక్క, నియోగాత్ = ఆదేశము వలన, అపనీత శంకం = అనుమానము తొలగింపబడినట్లుగా, మయా = నాచేత, కార్యం = చేయదగినది.

తా। భూలోకమునందు అంతట ఎల్లప్పుడు బ్రాహ్మణోత్తములు పూజింప దగిన వారని నేనెరుంగుదును. కాని ఇప్పుడు ఈ చెడు కార్యము కూడ తల్లి యొక్క ఆదేశము వలన అనుమానమును వదలి నాచేత చేయవలసి వచ్చినది.

వృద్ధః బ్రాహ్మణి! న స్మరసి తత్ర భవతా జలక్లిన్నేన
మునినోక్తమ్ - అనపేత రాక్షసమిదం వనమప్రమా-
దేన గంతవ్యమితి. తదేవోత్పన్నం భయమ్.

అ। బ్రాహ్మణి = ఓ బ్రాహ్మణీ !, తత్ర భవతా = అక్కడయున్న, జలక్లిన్నేన =నీటి యందు మునిగియున్న, మునినా = మహర్షిచేత, ఉక్తం = చెప్పబడిన దానిని, న స్మరసికిం = స్మరించుట లేదా? ఇదం వనం = ఈ అరణ్యము, అనపేత రాక్షసం = రాక్షసులతో కూడినది, అప్రమాదేన = జాగ్రత్తగా, గంతవ్యం = వెళ్ళవలయును, ఇతి = అని, తత్ భయం ఏవ = ఆ భయమే, ఉత్పన్నం = సంభవించినది.

తా। ఓ బ్రాహ్మణి! "ఈ అరణ్యము రాక్షసులతో నిండియున్నది. జాగ్రత్తగా వెళ్ళ వలయును" అని జలమందు మునిగి యున్న మహర్షిచే చెప్పబడినది నీకు గుర్తులేదా! ఆ ప్రమాదమే సంభవించినది.

బ్రా) కిమిదానీమార్యో మధ్యస్థ వర్ణ ఇవ దృశ్యతే ।
అ॥ ఇదానీం = ఇప్పుడు, ఆర్యః = ఆర్యుడు, మధ్యస్థవర్ణః ఇవ = మధ్యస్థ వంశస్థుని వలె, దృశ్యతే కిం = కనిపించుచున్నాడేమి?
తా॥ ఇప్పుడు స్వామి మధ్యస్థునివలె కనిపించుచున్నాడేమి?
వృ॥ కిం కరిష్యామి మందభాగ్యః ?
అ॥ మందభాగ్యః = మందభాగ్యుడను, కిం = ఏమి, కరిష్యామి = చేయగలను.
తా॥ మందభాగ్యుడను ఏమి చేయగలను ?
బ్రా) నను విక్రోశామః ।
బిగ్గరగా అరచెదము
బ్రా॥ భవతి ! కస్య వయం విక్రోశామః ।
అ॥ భవతి = అమ్మా !, వయం = మనము, కస్య = ఎవనికి, విక్రోశామః = అరచెదము.
తా॥ అమ్మా! ఎవనిని ఉద్దేశించి అరచెదము.
10.శ్లో॥ ఇదం హి శూన్యం తిమిరోత్కరప్రభైః
నగప్రకారై రవరుద్ధ దిక్పథమ్ ।
ఖగైర్మృగైశ్చాపి సమాకులాంతరం
వనం నివాసాభిమతం మనస్వినామ్॥
అ॥ ఇదంవనం = ఈ అరణ్యము, శూన్యం= జనశూన్యమైనది, తిమిరోత్కర ప్రభైః = చీకటి సమూహము యొక్క కాంతి కలిగిన, నగప్రకారైః = పర్వత సమూహములచే అవరుద్ధ దిక్పథం = ఆవరింపబడిన దిక్కుల మార్గము కలిగినది,ఖగైః = పక్షుల చేత, మృగైః చ = మృగములచేతకూడ, సమాకులాంతరం = నిండిన మధ్యభాగము కలిగినది. వనం = ఈ అరణ్యము, మనస్వినాం = ధైర్యవంతులకు, నివాసాభిమతమ్= నివసించుటకు తగినది.
తా॥ ఈ అరణ్యము జన శూన్యమైనది. చీకటి సముదాయము యొక్క కాంతిగల పర్వత సమూహములచే ఆవరింపబడిన దిక్కుల మార్గము గలది. పక్షులచేత మృగములచేత నిండిన మధ్య భాగము గలది. ఈ అరణ్యము ధైర్యవంతులకు నివసించుటకు యోగ్యమైనది.
వృ॥ బ్రాహ్మణి ః న భేతవ్యంనభేతవ్యమ్ । మనస్విజననివాసయోగ్యమితి శ్రుత్వా విగత ఇవ మే సంత్రాసః । శంకే నాత్రాతి దూరేణ పాండవాశ్రమేణ భవితవ్యమ్ । పాండవాస్తు-
అ॥ బ్రాహ్మణి = ఓ బ్రాహ్మణీ ! నభేతవ్యం = భయపడవలదు, మనస్విజన నివాసయోగ్యం = మునీశ్వరుల నివాసమునకు యోగ్యమైనది, ఇతి = అని, శ్రుత్వా = విని, మే = నాయొక్క, సంత్రాసః = భయము, విగతః ఇవ = తొలగినట్లున్నది, అత్ర = ఇక్కడ,

నాతి దూరేణ = సమీపమున, పాండవాశ్రమేణ = పాండవాశ్రమము, భవితవ్యం = ఉండును, ఇతి=అని, శంకే =తలంచుచున్నాను, పాండవాః తు = పాండవులయితే -

తా॥ ఓ బ్రాహ్మణీ ! భయపడవలదు. మునీశ్వరులకు నివాసయోగ్యమైనదని విని వా భయము తొలగినట్లున్నది. పాండవుల ఆశ్రమము సమీపమునందే ఉండి యుండునని తలంచుచున్నాను. పాండవులయితే -

11.శ్లో॥ యుద్ధప్రియాశ్చ శరణాగతవత్సలాశ్చ
దీనేషు పక్షపతితాః కృత సాహసాశ్చ ।
ఏవంవిధ ప్రతిభయాకృతి చేష్టితానాం
దండం యథార్హ మిహధారయితుం సమర్థాః

అ॥ యుద్ధప్రియాఃచ = యుద్ధమునందు ఆసక్తి గలవారును, శరణాగత = శరణు కొరకు వచ్చిన వారియందు,వత్సలాః చ=వాత్సల్యము గలవారును, దీనేషు = దీనులయందు, పక్షపతితాః = పక్షపాతముగలవారును, కృతసాహసాః చ = చేయబడిన సాహస కృత్యములు గలవారును, ఏవంవిధ = ఇటువంటి, ప్రతి భయాకృతిచేష్టితానాం = భయంకరమైన ఆకారముగల చేష్టలు గలవారికి, యథార్హం = తగినట్లుగా, దండం = శిక్షను, ధారయితుం = ఇచ్చుటకు, సమర్థాః = సమర్థులు.

తా॥ పాండవులు యుద్ధమందు ఆసక్తిగలవారు. శరణుకొరకు వచ్చిన వారియందు వాత్సల్యము గలవారు, దీనుల యందు పక్షపాతము గలవారు. సాహస కృత్యములను జేసినవారు. ఇటువంటి భయంకరమైన చేష్టలు గలవారికి తగినట్లుగా శిక్షను విధించుటకు సమర్థులు.

ప్రః భోస్తాత! న తత్ర పాండవా ఇతి మన్యే

అ॥ ఓతండ్రీ! అక్కడ పాండవులు లేరని భావించుచున్నాను.

వృః పుత్ర ! కథం త్వం జానీషే ।

అ॥ పుత్రుడా ! నీవెట్లు ఎరుంగుదువు.

ప్రః శ్రుతం మయా తస్మా దాశ్రమాదాగతేన కేనచిత్ బ్రాహ్మణేన కథితమ్ । శతకుంభం నామ యజ్ఞమనుభవితుం మహర్షేర్ధౌమ్యస్యాశ్రమం గతా ఇతి ।

అ॥ శతకుంభం నామ = శతకుంభము అను, యజ్ఞం = యజ్ఞమును, అనుభవితుం = పాల్గొనుటకు, మహర్షేః = మహర్షియైన,ధౌమ్యస్య= ధౌమ్యుని యొక్క ఆశ్రమం= ఆశ్రమమును గూర్చి, గతాః = వెళ్ళిరి, ఇతి = అని, తస్మాత్ ఆశ్రమాత్ = ఆ ఆశ్రమమునుండి, ఆగతేన = వచ్చిన, కేనచిత్ = ఒకానొక, బ్రాహ్మణేన = బ్రాహ్మణునిచే, కథితం = చెప్పబడినది, మయా = నాచేత, శ్రుతమ్ = వినబడినది.

రా। "శత కుంభమను యజ్ఞమునందు పాల్గొనుటకు మహర్షియైన ధౌమ్యుని ఆశ్రమమునకు వెళ్ళిరి" అని ఆ ఆశ్రమము నుండి వచ్చిన యొక బ్రాహ్మణుని ద్వారా వింటిని.

వృ॥ హంత, హతాః స్మః ।

అ। అయ్యో! చచ్చితిమికదా!

బ్రా॥ తాత! న తు సర్వ ఏవ । ఆశ్రమ పరిపాలనార్థమిహ స్థాపితః కిం మధ్యమః ।

అ। తాత = ఓ తండ్రీ ! కింతు = కాని, న సర్వః ఏవ = అందరూ పోలేదు, ఆశ్రమ పాలనార్థం = ఆశ్రమమును కాపాడుటకు, మధ్యమః = మధ్యముడైన భీముడు, ఇహ = ఇచ్చట, స్థాపితః కిల = ఉంచబడినాడు కదా!

రా। తండ్రీ! అందరూ వెళ్ళలేదు. ఆశ్రమమును కాపాడుటకు మధ్యముడైన భీముడు ఇచ్చటనే ఉంచబడినాడు కదా!

వృ॥ యద్యేవం సన్నిహితాః సర్వ ఏవ పాండవః ।

అ। యద్యేవం = అట్లైనచో, సర్వే పాండవాః = పాండవులు అందరూ సన్నిహితాః ఏవ= ఉన్నట్లే

రా। అట్లైనచో పాండవులందరూ ఉన్నట్లే.

బ్రా॥ స చాప్యస్యాం-వేలాయాం వ్యాయామ పరిచయార్థం విప్రకృష్ట దేశస్థ ఇతి శ్రూయతే।

అ। సః అపి = ఆ భీముడు కూడ, అస్యాం వేలాయాం = ఈ సమయమునందు, వ్యాయామపరిచయార్థం = వ్యాయామము చేయుట కొరకు, విప్రకృష్ట దేశస్థః ఇతి= దూరదేశమునందున్నాడు అని, శ్రూయతే = వినబడుచున్నది.

రా। ఆ భీముడు కూడ ఈ సమయమున వ్యాయామము చేయుట కొరకు దూరదేశమునందున్నాడని వినబడుచున్నది.

వృ॥ హంత నిరాశాః స్మః । భవతు, పుత్ర! వ్యపాశ్రయిష్యే తావదేనమ్ ।

అ। హంత = అయ్యో! నిరాశాః స్మః = హతాశులమైతిమి, భవతు = కానిమ్ము, పుత్ర = పుత్రా!, ఏనం = ఇతనిని, వ్యపాశ్రయిష్యే తావత్ = ఆశ్రయించెదనుగాక

రా। అయ్యో ! హతాశులమైతిమి, కానిమ్ము, పుత్రా! ఇతనినే ఆశ్రయించెదనుగాక !

బ్రా॥ అలమలం పరిశ్రమేణ ।

అ। శ్రమపడవలసిన పనిలేదు.

వృ॥ పుత్ర! నిర్వేదప్రత్యర్థినీ ఖలు ప్రార్థనా । భవతు, పశ్యామస్తావత్ । భోః పురుష! అస్త్యస్మాకం మోక్షః?

అ। పుత్ర = పుత్రుడా!, ప్రార్థనా = ప్రార్థించుట, నిర్వేద ప్రత్యర్థినీ ఖలు = విడుదల కొరకు కోరునదికదా! భవతు =కానిమ్ము, పశ్యామఃతావత్ = చూచెదము. భోఃపురుష= ఓ పురుషుడా!, అస్మాకం = మాకు, మోక్షః = విముక్తి, అస్తి = కలదా?

తా॥ ఓ పుత్రుడా! విడుదల కొరకు చేయునది ప్రార్థనకాదా! కావిమ్ము, యాచెదము. ఓ పురుషుడా! మాకు విముక్తి కలదా?

ఘ॥ మోక్షోస్తి సమయతః

అ॥ ఒక షరతుపై విముక్తి కలదు.

వృ॥ కః సమయః?

అ॥ ఏమి షరతు ?

ఘ॥ అస్తిమే తత్రభవతీ జననీ।। తయాహమాజ్ఞప్తః - పుత్ర! మమోపవాస విసర్గార్థమస్మిన్ వనదేశే కశ్చిన్మానుషః పరిమృగ్యానేతవ్య ఇతి । తతో మయాసాదితో భవాన్ ।

అ॥ మే= నాకు, తత్ర భవతీ = పూజనీయురాలైన, జననీ = తల్లి, అస్తి = కలదు, తయా= ఆమెచే, అహం = నేను, ఆజ్ఞప్తః = ఆజ్ఞాపించబడితిని, పుత్ర = పుత్రుడా!, మమ = నాయొక్క, ఉపవాస విసర్గార్థం = ఉపవాసానంతరము పారణ కొరకు, అస్మిన్ వనదేశే= ఈ అడవి ప్రదేశమందు, కశ్చిత్ = ఒకానొక, మానుషః = మానవుడు, పరిమృగ్య = అన్వేషించి, ఆనేతవ్యః = తీసుకొని రాతగినవాడు, ఇతి = అని, తతః = తరువాత, మయా = నాచేత, భవాన్ = నీవు, ఆసాదితః = పొందబడితివి.

తా॥ నాకు పూజనీయురాలైన తల్లి కలదు. ఆమె "పుత్రుడా! నాకు ఉపవాసానంతరము పారణ కొరకు ఈ అడవిలో యొక మనిషిని వెతికి తీసుకొని రావలయును" అని నన్ను ఆదేశించినది. తరువాత నీవు నాకంటబడితివి.

12.శ్లో॥ పత్న్యా చారిత్రశాలిన్యా ద్విపుత్రో మోక్షమిచ్ఛసి ।

బలాబలం పరిజ్ఞాయ పుత్రమేకం విసర్జయ ।

అ॥ చారిత్రశాలిన్యా = శీలముతో కూడినట్టి, పత్న్యా = భార్యతో, ద్విపుత్రః = ఇద్దరు పుత్రులు కలవాడవై, మోక్షం = విముక్తిని, ఇచ్ఛసి = కోరినచో, బలాబలం = తారతమ్యములను, పరిజ్ఞాయ = తెలుసుకొని, ఏకం పుత్రం = ఒక పుత్రుని, విసర్జయ = విడువుము.

తా॥ శీలముతో ప్రకాశించుచున్న భార్యతో ఇద్దరు పుత్రులు గలవాడవై విముక్తి పొంద కోరినచో, తారతమ్యములను తెలుసుకొని యొక పుత్రుని వదలుకొనుము.

వృ॥ హం భో రాక్షసాపసద । కిమహమబ్రాహ్మణః।

అ॥ అయ్యో! ఓయీ దుష్టరాక్షసుడా! నేను బ్రాహ్మణుడను కానా ?

13. శ్లో॥ బ్రాహ్మణః శ్రుతవాన్ వృద్ధః పుత్రం శీలగుణాన్వితమ్।
పురుషాదస్య దత్త్వాహం కథం నిర్వృతి మాప్నుయామ్ ।

అ॥ బ్రాహ్మణః = బ్రాహ్మణుడవైన, శ్రుతవాన్ = విద్యావంతుడవైన, వృద్ధః = ముసలివాడవైన, అహం = నేను, శీలగుణాన్వితం = శీల గుణములతో కూడినట్టి, పుత్రం = పుత్రుని, పురుషాదస్య = మానవులను భుజించునట్టి రాక్షసునకు, దత్త్వా = ఇచ్చి, కథం = ఎట్లు, నిర్వృతిం = సుఖమును, ఆప్నుయామ్ = పొందగలను?

తా॥ బ్రాహ్మణుడవైన, విద్యావంతుడవైన, ముసలివాడవైన నేను శీలగుణములతో కూడిన పుత్రుని మానవులను భుజించు రాక్షసునకు యిచ్చి, ఎట్లు సుఖమును పొందగలను?

ఘటోత్కచః –

14.శ్లో॥ యద్యర్థితో ద్విజశ్రేష్ఠ! పుత్రమేకం న ముంచసి।
సకుటుంబః క్షణేనైవ వినాశ ముపయాస్యసి ।

అ॥ ద్విజశ్రేష్ఠ = ఓ బ్రాహ్మణశ్రేష్ఠుడా!, అర్థితః = కోరబడినవాడవై, ఏకం పుత్రం = ఒక పుత్రుని, న ముంచసి యది = విడువకపోయినచో, క్షణేనైవ = క్షణములోనే, సకుటుంబః= కుటుంబముతో కూడినవాడవై, వినాశం =వినాశనమును, ఉపయాస్యసి = పొందగలవు.

తా॥ ఓ బ్రాహ్మణశ్రేష్ఠుడా! కోరబడినవాడవై యొక పుత్రుని నీవు విడువక పోయినచో క్షణములోనే కుటుంబముతో సహా వినాశమును పొందగలవు.

వృద్ధః బ్రాహ్మణి! ఏష ఏవమే నిశ్చయః।

అ॥ ఓ బ్రాహ్మణీ! ఇదియే నా నిశ్చయము.

15.శ్లో॥ కృతకృత్యం శరీరం మే పరిణామేన జర్జరమ్।
రాక్షసాగ్నే సుతాపేక్షీ హోష్యామి విధి సంస్కృతమ్॥

అ॥ కృతకృత్యం = సార్థకమైన, పరిణామేన = పరిణామముచేత, జర్జరం = శిథిలమైన, విధి సంస్కృతం =విధి పూర్వకముగా సంస్కరింపబడిన, మే = నాయొక్క, శరీరం = దేహమును, సుతాపేక్షీ = పుత్రులను కోరినవాడనై, రాక్షసాగ్నే = రాక్షసుడను అగ్నియందు, హోష్యామి = హోమము చేయగలను.

తా॥ సార్థకమైన, వార్ధక్యముచే శిథిలమైన, విధిపూర్వకముగా సంస్కరింపబడిన నా దేహమును పుత్రులను కోరినవాడనై రాక్షసుడను అగ్నియందు హోమము చేయగలను.

బ్రాహ్మణీ : ఆర్య! మా మైవమ్ – పతిమాత్ర ధర్మిణీ పతివ్రతేతి నామ । గృహీత ఫలేనైతేన శరీరేణార్యం కులం చ రక్షితుమిచ్ఛామి.

అ॥ ఆర్య = స్వామీ!, మా మా ఏవం = వద్దు ఇట్లు వద్దు, పతిమాత్ర ధర్మిణీ = భర్తయే ధర్మముగా కలది, పతివ్రతా ఇతినామ = పతివ్రత అనునది కదా!, గృహీత ఫలేన = ఫలమును పొందిన, ఏతేన శరీరేణ = ఈశరీరముచేత, ఆర్యం = స్వామిని, కులంచ =వంశమును కూడ రక్షితుం = కాపాడుటకు, ఇచ్ఛామి = ఇష్టపడుచున్నాను.

తా॥ స్వామీ! వద్దు ఇట్లు వద్దు. పతివ్రత యనగా భర్తయే ధర్మముగా గలదికదా!

ఫలము పొందిన ఈ శరీరముచే ఆ స్వామిని, వంశమును కూడ కాపాడుటకు యిష్టపడుచున్నాను.

ఘటోత్కచః- న ఖలు స్త్రీ జనో౽భిమత స్తత్ర భవత్యాః।

అ। స్త్రీజనః = స్త్రీ జనము, తత్ర భవత్యాః = పూజనీయురాలైన తల్లికి, న అభిమతః ఖలు = ఇష్టమైనదికాదు కదా!

తా। పూజనీయురాలైన తల్లికి స్త్రీ జనమభిమతము కాదు కదా!

వృద్ధః -అహ మను గమిష్యామి భవంతమ్।

అ। అహం = నేను, భవంతం = నిన్ను, అనుగమిష్యామి = అనుసరించెదను.

తా। నేను నిన్ను అనుసరించెదను.

ఘటోత్కచః ఆః వృద్ధః త్వమపర।

అ। ఆ! నీవు వృద్ధుడవు తొలగిపొమ్ము.

ప్రథమః : భోస్తాత! బ్రవీమి ఖలు తావత్ కించిత్।

అ। ఓ తండ్రీ! కొంచెము మాట్లాడెదను.

వృద్ధః- పుత్ర! కథయ।

అ। పుత్రుడా! చెప్పుము.

ప్రథమః :

16.శ్లో॥ మమ ప్రాణై ర్గురుప్రాణా నిచ్ఛామి పరిరక్షితుమ్।
రక్షణార్థం కులస్యాస్య మోక్తు మర్హసి మాంభవాన్॥

అ। మమ = నాయొక్క, ప్రాణైః = ప్రాణములతో, గురుప్రాణాన్ = తండ్రి ప్రాణములను, పరిరక్షితుం = కాపాడుటకు, ఇచ్ఛామి = ఇష్టపడుచున్నాను, అస్యకులస్య = ఈ కులము యొక్క, రక్షణార్థం = కాపాడుటకొరకు, భవాన్ = నీవు, మాం = నన్ను, మోక్తుం = విడుచుటకు, అర్హసి = తగుదువు.

తా। నా ప్రాణములతో పెద్దల ప్రాణములను కాపాడుటకు ఇష్టపడుచున్నాను. ఈ వంశమును కాపాడుట కొరకు నీవు నన్ను విడిచిపెట్టుము.

ద్వితీయః : ఆర్య! మా మైవమ్।

తా। ఆర్యా! వద్దు ఇట్లనవద్దు.

17.శ్లో॥ జ్యేష్ఠః శ్రేష్ఠః కులేలోకే పితౄణాం చ సుసంప్రియః।
తతో౽హమేవ యాస్యామి గురువృత్తిమనుస్మరన్॥



అ। లోకే = లోకమునందు, కులే = కులమునందు, జేష్ఠః = జ్యేష్ఠుడు, శ్రేష్ఠః = శ్రేష్ఠుడు, పితౄణాం చ = పితరులకు కూడ, సుసంప్రియః = మిక్కిలి ప్రియమైనవాడు తతః = అందువలన, అహమేవ = నేనే, గురువృత్తిం = తండ్రియొక్క వ్యవహారమును, అనుస్మరన్ = స్మరించుచున్నవాడనై, యాస్యామి = వెళ్ళగలను.

తా। లోకమునందు కులమునందు జ్యేష్ఠపుత్రుడు శ్రేష్ఠమైనవాడు. పితరులకు కూడ మిక్కిలి ఇష్టమైనవాడు. అందువలన నేనే తండ్రి వ్యవహారమును స్మరించుచూ

వెళ్ళగలను.

తృతీయః – వత్స! మా మైవమ్ ।

అ॥ ఆర్యా! వలదు ఇట్లు వలదు.

18.శ్లో॥ జ్యేష్ఠో భ్రాతా పితృసమః కథితో బ్రహ్మవాదిభిః ।
తతోఽహం కర్తుమర్హోస్మి గురూణాం ప్రాణరక్షణమ్ ।

అ॥ జ్యేష్ఠః భ్రాతా = జ్యేష్ఠ సోదరుడు, పితృసమః = తండ్రితో సమానుడు, ఇతి = అని, బ్రహ్మవాదిభిః = మహర్షులచే, కథితః = చెప్పబడినవాడు, తతః = అందువలన, అహం = నేను, గురూణాం = పెద్దలయొక్క, ప్రాణరక్షణం = ప్రాణములను కాపాడుటను, కర్తుం = చేయుటకు, అర్హః = అర్హుడను, అస్మి = అగుచున్నాను.

తా॥ జ్యేష్ఠసోదరుడు తండ్రితో సమానుడని మహర్షులచే చెప్పబడినాడు. అందువలన నేను పెద్దల ప్రాణములనుకాపాడుటను చేయుట కర్హుడను అగుచున్నాను.

ప్రథమః– వత్స! మా మైవమ్ ।

అ॥ వత్సా! వలదు ఇట్లు వలదు.

19.శ్లో॥ ఆపదం హి పితా ప్రాప్తో జ్యేష్ఠ పుత్రేణ తార్యతే ।
తతోఽహమేవ యాస్యామి గురూణాం ప్రాణరక్షణాత్ ।

అ॥ ఆపదం = ఆపదను, ప్రాప్తః = పొందినవాడైన, పితా = తండ్రి, జ్యేష్ఠ పుత్రేణ = జ్యేష్ఠ పుత్రునిచే, తార్యతే = తరింపజేయబడుచున్నాడు, తతః = అందువలన గురూణాం = పెద్దలయొక్క, ప్రాణరక్షణాత్ = ప్రాణములను కాపాడుటకు, అహమేవ = నేనే, యాస్యామి = వెళ్ళగలను.

తా॥ ఆపదను పొందిన తండ్రి జ్యేష్ఠ పుత్రునిచే తరింపజేయబడుచున్నాడు. అందువలన పెద్దల ప్రాణములను కాపాడుటకు నేనే వెళ్ళగలను.

వృద్ధః – జ్యేష్ఠ మిష్టతమం న శక్నోమి పరిత్యక్తుమ్।

అ॥ ఇష్టతమం = మిక్కిలి ప్రియమైన, జ్యేష్ఠం = జ్యేష్ఠపుత్రుని, పరిత్యక్తుం= వదలుటకు, నశక్నోమి = సమర్థుడనుకాను.

తా॥ మిక్కిలి ప్రియమైన జ్యేష్ఠపుత్రుని వదలుటకు నేనశక్తుడను.

బ్రాహ్మణీ – యథార్యో జ్యేష్ఠమిచ్ఛతి, తథాహమపి కనిష్ఠ మిచ్ఛామి.

అ॥ యథా = ఏవిధముగా, ఆర్యః = స్వామి, జ్యేష్ఠం = జ్యేష్ఠుని, ఇచ్ఛతి = ఇష్టపడుచున్నాడో, తథా = ఆవిధముగా, అహమపి = నేను కూడ, కనిష్ఠం = కనిష్ఠపుత్రుని, ఇచ్ఛామి = ఇష్టపడుచున్నాను.

తా॥ ఏవిధముగా స్వామి జ్యేష్ఠుని ఇష్టపడుచున్నాడో, ఆవిధముగా నేను కూడ కనిష్ఠుని ఇష్టపడుచున్నాను.

ద్వితీయః – పిత్రోరనిష్టః కస్యేదానీం ప్రియః?

అ॥ పిత్రోః = తల్లిదండ్రులకు, అనిష్టః = ఇష్టము లేనివాడనైన నేను, ఇదానీం = ఇప్పుడు, కస్య = ఎవనికి, ప్రియః = ఇష్టమైనవాడను.

తా॥ తల్లిదండ్రులకు ఇష్టములేనివాడనైన నేను యిప్పుడు ఎవనికి ఇష్టమగుచున్నాను.

**ఘటోత్కచః – అహం ప్రీతోఽస్మి, శీఘ్రమాగచ్ఛ**

అ॥ అహం =నేను, ప్రీతః = సంతుష్టుడను, అస్మి = అగుచున్నాను, శీఘ్రం = త్వరగా, ఆగచ్ఛ = రమ్ము.

తా॥ నేను సంతుష్టుడనగుచున్నాను. త్వరగా రమ్ము.

ద్వితీయ ।

20. శ్లో॥ ధన్యోఽస్మియద్ గురుప్రాణాః స్వైః ప్రాణైః పరిరక్షితాః ।

**బంధుస్నేహాద్ధి మహతః కాయస్నేహస్తు దుర్లభః ।**

అ॥ గురుప్రాణాః = పెద్దలయొక్క ప్రాణములు, స్వైః ప్రాణైః = నా ప్రాణములచే, పరిరక్షితాః = రక్షింపబడుచున్నవి, ధన్యః = ధన్యుడను, అస్మి = అగుచున్నాను, యత్ = ఏలయనగా, మహతః = గొప్పదైన, బంధుస్నేహాత్ =బంధువుల ప్రేమకంటె, కాయస్నేహః = శరీరమునందలి ప్రేమ, దుర్లభః హి = తుచ్ఛమైనదికదా !

తా॥ నా ప్రాణములచే పెద్దల ప్రాణములు రక్షింపబడుచున్నవి. ధన్యుడనగుచున్నాను. ఏలయనగా గొప్పదైన బంధు ప్రేమకంటె శరీరమునందలి ప్రేమ తుచ్ఛమైనది కదా!

**ఘటోత్కచః – అహో స్వజన వాత్సల్య మస్య బ్రాహ్మణ వటోః ।**

అ॥ అహో = ఆహా!, అస్య బ్రాహ్మణ వటోః = ఈ బ్రాహ్మణ బ్రహ్మచారియొక్క, స్వజన వాత్సల్యం = బంధు వాత్సల్యము.

తా॥ ఆహా! ఈ బ్రాహ్మణ బ్రహ్మచారియొక్క బంధు వాత్సల్యము.

**ద్వితీయః – భోస్తాత ! అభివాదయే !**

అ॥ ఓ తండ్రీ ! నమస్కరించుచున్నాను.

**వృద్ధః – ఏహ్యేహి పుత్ర !**

అ॥ పుత్రుడా ! రమ్ము, రమ్ము.

21. శ్లో॥ వినిమాయ గురుప్రాణాన్ స్వైః ప్రాణైర్గురు వత్సల !

**అకృతాత్మదురావాసం బ్రహ్మలోకమవాప్నుహి ।**

అ॥ గురువత్సల = గురువుల యందు వాత్సల్యము కలవాడా!, స్వైః ప్రాణైః = నీప్రాణములతో, గురుప్రాణాన్ = పెద్దల ప్రాణములను, వినిమాయ = వినిమయము చేసి, అకృతాత్మ = పాపాత్ములకు, దురావాసం = పొందశక్యము కాని, బ్రహ్మలోకం = బ్రహ్మలోకమును, అవాప్నుహి = పొందుము.

తా॥ గురువుల యందు వాత్సల్యము కలవాడా! నీ ప్రాణములతో పెద్దల

